N.A.
Shri Rudra
श्रीरुद्र
Sanskrit
Paper — Printed
1813 Sakabda (127 years old)
29 Folio
10"x4.6"
Complete

रु-



॥ श्री सांबसदाशिवाय नमः ॥ श्रीगुरुभ्यो नमः ॥

मेधाव्युवाच ॥ ॐनमः शंभवे नित्यमृत्युंजय नमोस्तुते
॥ ॐमून्नमो गौरीनाथाय शरणागत वत्सल ॥ १ ॥
ॐनमो विश्वरूपाय ॐनमो नंतमूर्तये ॥ ॐनमो रू-
पहीनाय नानारूपायतेनमः ॥ २ ॥ ॐमून्नमो नि-

द्र.

१ ष्कलंकाय ॐ नमो निर्गुणायते ॥ ॐ नमो निर्विकाराय
शांताकारायते नमः ॥ ३ ॥ ॐ नमो निष्प्रपंचाय
नमः श्रुत्यात्मकायते ॥ ॐ नमः कालरूपाय का-
लातीतायते नमः ॥ ४ ॥ ॐ नमः श्रीमहेशाय सर्वा-
धारायते नमः ॥ ॐ नमः पुण्यरूपाय पुण्यातीतायते १

रू- नमः ॥ ५ ॥ ॐनमो भूस्वरूपाय ॐनमो जलमूर्तये द्रू:
॥ ॐम्नम अग्निरूपाय ॐम्नमो वायुमूर्तये ॥ ६ ॥
ॐम्नमों काररूपाय दिक्स्वरूपायते नमः ॥ ॐम्
नमः कालरूपाय यज्ञ रूपायते नमः ॥ ७ ॥
ॐम्नमो भानुरूपाय इंदुरूपायते नमः ॥ ॐम्नमः

२ सर्वरूपाय शरण्यायनमो नमः ॥ ८ ॥ ॐम् अस्य-
रुद्रमन्त्रस्य अनुष्टुप्छंदस्य अघोरऋषिः। संकर्षणमूर्तिः
स्वरूपोयो सावादित्यः परपुरुष स्सएवरुद्रोदेवता ।
अग्निक्रतुचरमाया मिष्टिकाया २ शतरुद्रीये जपेविनि-
योगः। ॐम् सकलस्यरुद्राध्यायस्य श्रीरुद्रोदेवताए- २

रु- कागाइत्री छंदः । तिस्रोनुष्टुप् तिस्रपंक्तयः । सप्ता- द्र.
ष्टुप्भोद्भे जगत्यौपरमेष्ठिऋषिः । ममसमस्त तत्
येजमानस्य दुरितविघ्नपरिहरार्थं । श्रीभवानिशंकराप्रि-
त्यर्थं रुद्रजपेविनियोगः ॥ हरः ॥ ॐ नमंस्ते रुद्रमन्यवं
उतोत इषवेनमः । नमंस्ते अस्तुधन्वंने बाहुभ्यामुतते

३ नमः । यातइषुः शिवतमा शिवंबभूवते धनुः । शिवा
शरव्याया तवतयानो रुद्रमृडया । यातेरुद्रः शिवातनू
रघोरापापकाशिनी । तयानस्तनुवा शंतमया गिरिशं-
ताभिचाकशीः । यामिषुं गिरिशंतहस्ते बिभर्ष्यस्तवे ।
शिवांगिरित्रतां कुरुमाहि ꣳ सीः पुरुषंजगत् । शिवेन ३

रु- वर्चसात्वा गिरिशाच्छावदामसि । यथानः सर्वमिज्जगद द्र.
यक्ष्म ऽँ सुमनाअसत् । अध्यवोचदधिवक्ता प्रथमोदै-
व्योभिषक् । अहीं ऽँ श्चसर्वाजंभय न्त्सर्वाश्चयातुधा-
न्यः । असौयस्ताम्रोअरुणउत बभ्रुः सुमंगलः । येचे-
मा ऽँ रुद्राअभितो दिक्षुश्रिताः । सहस्रशोवैषा ऽँ

५ हेडईमहे । असौयोवसर्पति नीलग्रीवोविलोहितः ।
उतैनंगोपाअदृशंनदृशं नुदहार्यः । उतैनंविश्वाभूतानि
सदृष्टोमृडयातिनः । नमोअस्तुनीलग्रीवाय सहस्राक्षा-
यमीढुषे । अथोयेअस्यसत्वानो हंतेभ्योकरंनमः । प्रमु
चधन्वनस्त्व मुभयोरार्त्नियोर्ज्यां । याश्चतेहस्तइषवः ४

रु- पराताभगवोवप । अवतत्यधनुस्त्व ५ सहस्राक्षशतेषु द्र.

धे । निशीर्यशल्यानां मुखाशिवोनः सुमनाभव । वि

ज्यंधनुः कपर्दिनो विशल्योबाणवा ५ उत । अनेशन्नः

स्येषव आभुरस्यनिषंगथिः । याते हेतिर्मीढुष्टमहस्ते ब-

भवतेधनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परि भ्भुज ।

५ नमस्तेअस्त्वायुधाया नाततायधृष्णवे । उभाभ्यामुतते
नमो बाहुभ्यांतवधन्वने । परितेधन्वनोहेतिरस्मा न्वृ-
णक्तुविश्वतः । अथोयइषुधिस्तवारे अस्मन्निधेहितं ।
नमस्तेअस्तुभगवन् विश्वेश्वराय महादेवाय त्र्यंबकाय
त्रिपुरांतकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकं ५

ठायसर्वेश्वरायसदाशिवायश्रीमहादेवायनमः ॥ १ ॥



ॐनमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमो नमोवृक्षे
भ्योहरिकेशेभ्यःपशूनांपतयेनमो नमःसस्पिंजरायत्विषि
मतेपथीनांपतयेनमो नमोबभ्लुशायविव्याधिनेन्नांनांपत
येनमो नमोहरिकेशायोपवीतिनेपुष्टानांपतयेनमो नमो

भवस्यहेत्यैजगतांपतयेनमो नमोरुद्रायाततायिनेक्षेत्रा
णांपतयेनमो नमइंद्रजटाकलापिनांपतयेनमो नमोवृषा
ललतायिनांपतयेनमो नमोललाटवृकायिनांपतयेनमो
नमोललाललतायिनांपतयेनमो नमोवनानंनतायिनांप-
तयेनमो नमोमनानंनतायिनांपतयेनमो नमोननानंन

६

रु- तायिनांपतयेनमो नमः सूतायाहंत्यायवनानांपतयेनमो द्र.
नमोरोहितायस्थपतयेवृक्षाणांपतयेनमो नमोमंत्रिणेवा
णिजायकक्षाणांपतयेनमो नमोभुवंतयेवारिवस्कृतायौष
धीनांपतयेनमो नमउच्चैर्घोषायाक्रंदयतेपतीनांपतयेन-
मो नमः कृत्स्नवीतायधावतेसत्वनांपतयेनमः ॥ २॥ ॐ

७ नमः सहमानायनिव्याधिनआव्याधिनीनांपतयेनमो

नमःककुभायनिषंगिणेस्तेनानांपतयेनमो नमोनिषंगिण

इषुधिमतेतस्कराणांपतयेनमो नमोवंचतेपरिवंचतेस्तायू

नांपतयेनमो नमोनिचरवेपरिचरायारण्यानांपतयेनमो

नमःसृकाविभ्योजिघांꣳसद्भ्योमुष्णतांपतयेनमो नमोसि ७

रु- मद्भ्योनक्तंचरद्भ्यः प्रकृंतानांपतयेनमो नमउष्णीषिणेगि द्र.

रिचरायकुलुंचानांपतयेनमो नमइषुमद्भ्योधन्वाविभ्यश्च

वोनमो नमआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमो नम

आयच्छद्भ्योविसृजद्भ्यश्चवोनमो नमोस्यद्भ्योविध्यद्भ्यश्च

वोनमो नमआसीनेभ्यः शयानेभ्यश्चवोनमो नमः स्व-

८ पद्भ्योजागृद्भ्यश्चवोनमो नमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो
नमः सभाभ्यः सभापतिभ्यश्चवोनमो नमअश्वेभ्योश्वप-
तिभ्यश्चवोनमः ॥ ३ ॥ ॐ नमअव्याधिनीभ्योविविध्यं-
तीभ्यश्चवोनमो नमउगणाभ्यस्तृꣳहतीभ्यश्चवोनमो न
मोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमो नमोव्रातेभ्योव्रातपति ८

भ्यश्चवोनमो नमोगणेभ्योगणपतिभ्यश्चवोनमो नमोवि
रूपेभ्योविश्वरूपेभ्यश्चवोनमो नमोमहद्भ्यः क्षुल्लकेभ्यश्च
वोनमो नमोरथिभ्योरथेभ्यश्चवोनमो नमोरथेभ्योरथप-
तिभ्यश्चवोनमो नमः सेनाभ्यः सेनानिभ्यश्चवोनमो नमः
क्षतृभ्यः संग्रहीतृभ्यश्चवोनमो नमस्तक्षभ्योरथकारेभ्यश्च

९ वोनमो नमःकुलालेभ्यःकर्मारेभ्यश्चवोनमो नमःपुंजिष्टे
भ्योनिषादेभ्यश्चवोनमो नमइषुकृद्भ्योधन्वकृद्भ्यश्चवो
नमो नमोमृगयुभ्यःश्वनिभ्यश्चवोनमो नमःश्वभ्यःश्वप-
तिभ्यश्चवोनमः ॥ ४ ॥ ॐनमोभवायचरुद्रायच नमः
शर्वायचपशुपतयेच नमोनीलग्रीवायचाशितिकंठायच न ९

रु- मः कपर्दिने चव्युप्तकेशायच नमः सहस्राक्षायचशतधन्व रुद्र.
नेच नमोगिरिशायचशिपिविष्टायच नमोमीढुष्टमायचेषु
मतेच नमोह्रस्वायचवामनायच नमोबृहतेचवर्षीयसेच
नमोवृद्धायचसंवृध्वनेच नमअग्रियायचप्रथमायच नम-
आशवेचाजिरायच नमः शीघ्रियायचशीभ्यायच नमऊ

१० र्म्यायचावस्वन्यायच नमः स्रोतस्यायचद्वीप्यायच ॥ ५
ॐ नमोज्येष्ठायचकनिष्ठायच नमः पूर्वजायचापरजायच
नमोमध्यमायचापगल्भायच नमोजघन्यायचबुध्निया
यच नमः सोभ्यायचप्रतिसर्यायच नमोयाम्यायचक्षेम्या
यच नमउर्वर्यायचखल्यायच नमः श्लोक्यायचावसान्या १०

हृ- यच नमोवन्यायचकक्ष्यायच नमः श्रवायचप्रतिश्रवाय द्र.
च नमआशुषेणायचाशुरथायच नमः शूरायचावभिंदते
च नमोवर्मिणेचवरूथिने च नमोबिल्मिने चकवचिनेच
नमः श्रुतायचश्रुतसेनायच ॥ ६ ॥ ॐनमोदुंदुभ्यायचा
हनन्यायच नमोधृष्णवे चप्रमृशायच नमोदूतायचप्रहि

तायच नमो निषंगिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधि
नेच नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्या
य च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय
च नमो नाद्याय च वैशंताय च नमः कूप्याय चावट्याय च न
मो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च न- 

रु- मईध्रियायचातप्यायच नमोवात्यायचरेष्मियायच न- द्र.
मोवास्तव्यायचवास्तुपायच ॥ ७ ॥ ॐनमःसोमायचरु
द्रायच नमस्ताम्रायचारुणायच नमःशंगायचपशुपतये
च नमउग्रायचभीमायच नमअग्रेवधायचदूरेवधायच
नमोहंत्रेचहनीयसेच नमोवृक्षेभ्योहरिकेशेभ्यो नमस्ता

१२ रायच नमः शंभवे चमयोभवे च नमः शंकरायचमयस्क

रायच नमः शिवायचशिवतरायच नमस्तीर्थ्यायचकूल्या

यच नमः पार्यायचावार्यायच नमः प्रतरणायचोत्तरणाय

च नमआतार्यायचालाद्यायच नमः शष्प्यायचफेन्याच

नमः सिकत्यायचप्रवाह्यायच ॥ ८ ॥ ॐ नमइरिण्यायच १२

रु- प्रपथ्यायच नमः किꣳ शिलायचक्षयनायच नमः कप- द्र.
र्दिने चपुलस्तये च नमोगोष्ठ्यायचगृह्यायच नमस्तल्प्या
यचगेह्यायच नमः काट्यायचगह्वरेष्ठायच नमोहृदय्याय
चनिवेष्ठ्यायच नमः पाꣳ सव्यायचरजस्यायच नमोनं
दिकायचकुष्मांडायच नमः परायचपरंतपायच नमः पर

१३ मात्मनायचधूमायच नमोहारायचतारायच नमोवाम-
नायचहरिण्यायच नमःशिवायचहरिकेशायच नमःशु-
ष्क्यायचहरित्यायच नमोलोम्यायचोलप्यायच नमऊ-
र्व्यायचसूर्म्यायच नमःपर्ण्यायचपर्णशद्यायच नमोपगुर
माणायचाभिघ्नतेच नमआख्खिदतेचप्रख्खिदतेच नमो- १३

रु- वःकिरिकेभ्योदेवाना ऽं हृदयेभ्यो नमोविक्षीणकेभ्योदे० द्र
ऽं हृ० नमोविचिन्वत्केभ्योदे० ऽं हृ० नमआनिर्हतेभ्यो
दे० ऽं हृ० नमआमीवत्केभ्योदेवाना ऽं हृदयेभ्यः ॥ ९ ॥
ॐ द्रापेअंधसस्पतेदरिद्रंनीललोहित । एषांपुरुषाणामेषां
पशूनांमाभेर्मारोमोएषांकिंचनाममत् । यातेरुद्रःशिवा

१४ तनूःशिवाविश्वाहभेषजी। शिवारुद्रस्यभेषजीतयानोमृ-
डजीवसे। इमा ॐ रुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरा
महेमतिं। यथानःशमसद्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअ-
स्मिन्ननातुरं। मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनम
साविधेमते। यच्छंचयोश्चमनुरायजेपितातदश्यामतवरु १४

रु- द्रप्रणी तौ। मानोमहान्तमुतमानो अर्भकंमानउक्षन्तमुतमा द्र.
नउक्षितं। मानोवधीः पितरंमोतमातरं प्रियामानस्तनुवो
रुद्ररीरिषः। मानस्तोकेतनयेमानआयुषिमानोगोषुमानो
अश्वेषुरीरिषः। वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोन
मसाविधेमते। आरात्तेगोघ्नउतपूरुषघ्नेक्षयद्वीरायसुम्नम

१५ स्मेते अस्तु । रक्षाचनोअधिचदेवब्रूह्यधाचनःशर्मयच्छद्वि
बर्हाः । स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं । मृ
डाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवपंतुसेनाः । परिणो
रुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः । अवस्थिरा
मघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडय । मीढुष्टम १५

शिवतमाशिवोनःसुमनाभव । परमेवृक्षआयुधंनिधाय-
कृत्तिंवसानआचरापिनाकंबिभ्रदागहि । विकिरिदविलो-
हितनमस्तेअस्तुभगवः । यास्तेसहस्र ँ हेतयोन्यमस्म-
न्निवपंतुताः । सहस्राणिसहस्रधाबाहुवोस्तवहेतयः ।
तासामीशानोभगवःपराचीनामुखाकृधि ॥ १० ॥ ॐ

सहस्राणिसहस्रशोयेरुद्राअधिभूम्यां । तेषा ॐ सहस्रयो
जनेवधन्वानितन्मसि । अस्मिन्महत्यर्णवे न्तरिक्षेभवा
अधि । तेषा० । नीलग्रीवाःशितिकंठाःशर्वाअधःक्षमा-
चराः । तेषा० । नीलग्रीवाःशितिकंठादिव ॐ रुद्राउप-
श्रिताः । तेषा० । येवृक्षेषुसस्पिंजरानीलग्रीवाविलोहि-

रु. ताः । तेषां० । येभूतानामधिपतयोविशिखासः कपर्दि- द्र.
नः । तेषां० । येअन्नेषुविविध्यंतिपात्रेषुपिबतोजनान् ।
तेषां० । येपथांपथिरक्षयऐलबृदायव्युधः । तेषां० । ये-
तीर्थानिप्रचरंतिसृकावंतोनिषंगिणः । तेषां० । येवना-
न्युपसर्पंतितेभ्योवृष्टिरुद्भायते । तेषां० । येग्राम्यानुपस

१७ पं तितेभ्योव्युष्टिमुपासते । तेषां० । येएतावंतश्चभूयां
ꣳ सश्चदिशोरुद्रावितस्थिरे । तेषां० । नमोरुद्रेभ्योयेपृ
थिव्यांयेषामन्नमिषवस्तेभ्यो । दशप्राचीर्दशदक्षिणाद-
शप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्योनमस्तेनोमृडयंतुते
यंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि । नमोरुद्रेभ्योयें १७

रु.	तरिक्षेयेषांवातइषवस्तेभ्यो । दशप्राचीर्दश० । नमोरुद्रे	रु.

भ्योयेदिविषांवर्षमिषवस्तेभ्यो । दशप्राचीर्द० । नमोरु

द्रेभ्योयेपृथिव्यांयेंतरिक्षेयेदिवियेषामन्नंवातोवर्षमिषव

स्तेभ्यो । दशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्द

शोर्ध्वास्तेभ्योनमस्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितं

१८ वोजंभेदधामि ॥ ॥ सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु।
पुरुषोवैरुद्रःसन्महोनमोनमः । विश्वंभूतंभुवनंचित्रंबहु
धाजातंजायमानंचयत् । सर्वोह्येषरुद्रस्तस्मैरुद्रायनमो
अस्तु । कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यंसे । वोचेमशंत
म ऽं हृदेसर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु । नमोहिर १८

रु. ण्यबाहवेहिरण्यवर्णायाहिरण्यरूपायाहिरण्यपतयेंबिकाप रु.
तयउमापतयेपशुपतयेनमोनमः ॥ ११ ॥ ॐसद्योजातं
प्रपद्यामिसद्योजातायवैनमोनमः । भवेभवेनातिभवेभव
स्वमांभवोद्भवायनमः ॥ १ ॥ ॐवामदेवायनमोज्येष्ठा
यनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणा

१९ यनमोबलायनमोबलविकरणायनमोबलप्रमथनायनमः
सर्वभूतदमनायनमोमनोन्मनायनमः ॥ २ ॥ ॐअघो
रेभ्योथघोरेभ्योघोरघोरेतरेभ्यः । सर्वेभ्यःसर्वशर्वेभ्यो
नमस्तेअस्तुरुद्ररूपेभ्यः ॥ ३ ॥ ॐतत्पुरुषायविद्महेम
हादेवायधीमहितन्नोरुद्रःप्रचोदयात् ॥ ४ ॥ ॐ १९

रु. ईशानःसर्व विद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्म द्र.
णोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॥५॥ ॐत्र्यंबकंय
जामहेसुगंधिंपुष्टिवर्धनं । उरुवारुकमिवबंधनान्मृत्यो
र्मुक्षीयमामृतात् ॥ ऋत ँ सत्यंपरंब्रह्मपुरुषंकृष्णपिंगलं
। उर्ध्वरेतंविरूपाक्षंविश्वरूपायवैनमोनमः ॥ योरुद्रो-

२० अग्नौयोअप्सुयओषधीषुयोरुद्रोविश्वाभुवनाविवेशतस्मै
रुद्रायनमोअस्तु । एषते रुद्रभागस्तंजुषस्वतेनावसेनप
रोमूजवतोतीह्यवततधन्वापिनाकहस्तः कृत्तिवासः ॥ त-
मुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य । य
क्ष्वामहे सौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ शांतिः २०

रु. शांतिः । शांतिः ॥ छ ॥ छ ॥ छू ॥ द्रु.

॥ ॐ अग्नाविष्णुसजोषसेमावर्धंतुवांगिरः । द्युम्नैर्वा-
जेभिरागतं । वाजश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमे
धीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रावश्चमेश्रुतिश्चमे
ज्योतिश्चमेसुवश्चमेप्राणश्चमेपानश्चमेव्यानश्चमेसुश्चमे

२१ चित्तंचमअधीतंचमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रंचमे
दक्षश्चमेबलंचमओजश्चमेसहश्चमआयुश्चमेजराचमआ-
त्माचमेतनूश्चमेशर्मचमेवर्मचमेगानिचमेस्थानिचमेपरू
ँषिचमेशरीराणिचमे ॥ १ ॥ ॐज्यैष्ठ्यंचमआधि
पत्यंचमेमन्युश्चमेभामश्चमेमश्चमेभश्चमेजेमाचमेमहि- २१

रु. माचमेवरिमाचमेपृथिमाचमेवर्ष्माचमेद्राघुयाचमेवृद्धं- द्व.
चमेवृद्धिश्चमेसत्यंचमेश्रद्धाचमेजगच्चमेधनंचमेवशश्चमे
त्विषि श्चमेक्रीडाचमेमोदश्चमेजातंचमेजनिष्यमाणंच-
मेसूक्तंचमेसुकृतंचमेवित्तंचमेवेद्यंचमेभूतंचमेभविष्यच्च-
मेसुगंचमेसुपथंचमऋद्धंचमऋद्धिश्चमेक्लृप्तंचमेक्लृप्तिश्चमे

२२ मतिश्चमेसुमतिश्चमे ॥ २ ॥ ॐ शंचमेमयश्चमेप्रियंचमे
नुकामश्चमेकामश्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमे
वस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयंताचमेधर्ताचे
मेक्षेमश्चमेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंच-
मेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मं २२

चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमेभ-

यंचमेसुगंचमेशयनंचमेसूषाचमेसुदिनंचमे ॥ ३ ॥ ॐ

ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतंचमेमधुचमेस-

ग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रंचमऔ-

द्भिद्यंचमेरायिश्चमेरायश्चमेपुष्टंचमेपुष्टिश्चमेविभुचमे

२३ प्रभु चमे बहु चमे भूयश्च मे पूर्णं चमे पूर्णतरं चमेक्षितिश्च मेकू २३
यवाश्च मेन्नं चमेक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे
तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च-
मे प्रियंगवश्च मेणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥
४ ॥ ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे

रु. सिकताश्चमेवनस्पतयश्चमेहिरण्यंचमेयश्चमेसीसंचमेत्रपु द्र.
श्चमेश्यामंचमेलोहंचमेऽग्निश्चमआपश्चमेवीरुधश्चमओष
धयश्चमेकृष्टपच्यंचमेऽकृष्टपच्यंचमेग्राम्याश्चमेपशवआर-
ण्याश्चयज्ञेनकल्पन्तांवित्तंचमेवित्तिश्चमेभूतंचमेभूतिश्चमे
वसुचमेवसतिश्चमेकर्मचमेशक्तिश्चमेर्थश्चमएमश्चमइति

२४ श्चमेगतिश्चमे ॥ ५ ॥ ॐअग्निश्चमइंद्रश्चमेसोमश्चमइंद्र
श्चमेसवितचमइंद्रश्चमेसरस्वतीचमइंद्रश्चमेपूषाचमइंद्र-
श्चमेबृहस्पतिश्चमइंद्रश्चमेमित्रश्चमइंद्रश्चमेवरुणश्चमइंद्र
श्चमेत्वष्टाचमइंद्रश्चमेधाताचमइंद्रश्चमेविष्णुश्चमइंद्रश्च
मेश्विनौचमइंद्रश्चमेमरुतश्चमइंद्रश्चमेविश्वेचमेदेवाइंद्रच २४

रु. मेपृथिवीचमइंद्रश्चमेतरिक्षंचमइंद्रश्चमेद्यौश्चमइंद्रश्चमे रु.
दिशश्चमइंद्रश्चमेमूर्धाचमइंद्रश्चमेप्रजापतिश्चमइंद्रश्चमे ॥
६ ॥ ॐअ ꣳ शुश्चमेरश्मिश्चमेदाभ्यश्चमोधिपतिश्चम
उपा ꣳ शुश्चमेतर्यामश्चमऐंद्रवायवश्चमेमैत्रावरुणश्च
मआश्विनश्चमेप्रतिप्रस्थानश्चमेशुक्रश्चमेमंथीचमआ-

ग्रयणश्चमेवैश्वदेवश्चमेध्रुवश्चमेवैश्वानरश्चमऋतुग्रहाश्चमे
तिग्राह्याश्चमऐन्द्राग्नश्चमेवैश्वदेवश्चमेमरुत्वतीयाश्चमेमाहे
द्रश्चमआदित्यश्चमेसावित्रश्चमेसारस्वतश्चमेपौष्णश्चमे
पात्नीवतश्चमेहारियोजनश्चमे ॥ ७ ॥ ॐ इध्मश्चमेब
र्हिश्चमेवेदिश्चमेधिष्णियाश्चमेस्रुचश्चमेचमसाश्चमे

रु.    ग्रावाणश्चमेस्वरवश्चमउपरवाश्चमेधिषवणेचमेद्रोणक    रु.
लशश्चमेवायव्यानिचमेपूतभृच्चमआधवनीयश्चम
आग्नीध्रंचमेहविर्धानंचमेग्रहाश्चमेसदश्चमेपुरोडाशाश्च
मेपचताश्चमेवभृतश्चमेस्वगाकारश्चमे ॥ ८ ॥ ॐअ-
ग्निश्चमेघर्मश्चमेर्कश्चमेसूर्यश्चमेप्राणश्चमेश्वमेधश्च

मेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेशक्वरीरंगुलयो
दिशश्चमेयज्ञेनकल्पंतामृक्चमेसामचमेस्तोमश्चमेयजु-
श्चमेदीक्षाचमेतपश्चमऋतुश्चमेव्रतंचमेहोरात्रयोर्वृष्ट्यावृ
हद्रथंतरेचमेयज्ञेनकल्पेतां ॥ ९ ॥ ॐगर्भाश्चमेवत्साश्च
मेत्र्यविश्चमेत्र्ययवीचमेदित्यवाट्चमेदित्यौहीचमेपंचा

रु. विश्चमेपंचावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्यवाट्चमेतु रु.
र्यौहीचमेपष्ठवाच्चमेपष्ठौहीचमउक्षाचमेवशाचमऋषभ-
श्चमेवेहच्चमेनड्वांचमेधेनुश्चमआयुर्यज्ञेनकल्पतांप्राणोय
ज्ञेनकल्पतामपानोयज्ञेनकल्पतांव्यानोयज्ञेनकल्पतांच-
क्षुर्यज्ञेनकल्पतां श्रोत्रंयज्ञेनकल्पतांमनोयज्ञेनकल्प-

तांवाग्यज्ञेनकल्पतामात्मायज्ञेनकल्पतांयज्ञोयज्ञेनक-
ल्पतां ॥ १० ॥ ॐएकाचमेतिस्रश्चमेपंचचमेसप्तचमे
नवचमएकादशचमेत्रयोदशचमेपंचदशचमेसप्तदशच-
मेनवदशचमएकाविं २ शतिश्चमेत्रयोविं २ शतिश्चमेपं
चविं २ शतिश्चमेसप्तविं २ शतिश्चमेनवविं २ शतिश्चम

रु. एकात्रि ꣳ शच्चमेत्रयस्त्रि ꣳ शच्चमेचतस्रश्चमेष्टौचमेद्वा- द्र.
दशचमेषोडशचमेवि ꣳ शतिश्चमेचतुर्वि ꣳ शतिश्चमे
ष्टावि ꣳ शतिश्चमेद्वात्रि ꣳ शच्चमेषट्त्रि ꣳ शच्चमेच-
त्वारि ꣳ शच्चमेचतुश्चत्वारि ꣳ शच्चमेष्टाचत्वारि ꣳ
शच्चमेवाजश्चप्रसवश्चापिजश्चक्रतुश्चसुवश्चमूर्धाचव्यश्नि

याश्चंत्यायनश्चांत्यंश्चभौवनश्चभुवनश्चाधिपतिश्च ॥ ११
॥ ॐइडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशं
सिषद्विश्वेदेवाःसूक्तवाचःपृथिविमातर्मामाहिं शीर्म-
धुमनिष्येमधुजानिष्येमधुवक्ष्यामिमधुवदिष्यामिमधुम
तींदेवेभ्योवाचमुद्याः ॥ स शुश्रूषेण्यांमनुष्येभ्यस्तं-

रु.

मांदेवाअवंतुशोभायैपितरोनुमदंतु ॥ शांतिःशांतिःशां-
तिः ॥ सहनाभवंतुसहनौभुवनक्तुसहवीर्यंकरवावहैतेज-
स्विनावधीतमस्तुमाविद्विषावहै ॥ ॐशांतिः शांतिः
शांतिः ॥ यद्यत्श्रीभवानीशंकरार्पणमस्तु ॥ शुभंभवतु ॥

द्र.



॥ इदंपुस्तकं द्वादशी क्षेत्रे प्रबोधरत्न मुद्रायंत्रालयाधिपतिना मुद्रितं शा-
लिवहान शकाब्दः १८१३ भाद्रपदकृष्ण ४ चंद्रवासरे ॥ मूल्यं रुपकार्धः ॥

